



* नन्दको कथा परिशिष्ट २ अन्तर्गत पृष्ठ ४६५ मा हेर्नुहोला ।
** अंगुलिमालको कथा परिशिष्ट २ अन्तर्गत पृष्ठ ४६० मा हेर्नुहोला ।
*** अजातशत्रुको कथा परिशिष्ट २ अन्तर्गत पृष्ठ ४६० मा हेर्नुहोला ।
**** उदयनको कथा परिशिष्ट २ अन्तर्गत पृष्ठ ४६३ मा हेर्नुहोला ।

२७. अत्ययमत्ययत्वेन प्रतिगृह्णन्तु नायकाः ।
न भद्रकमिदं नाथा न कर्तव्यं पुनर्मया ॥ बोधिचर्यावतार - २/६६

२८. ये बुद्धं शरणं यान्ति न ते गच्छन्ति दुर्गतिम् ।
प्रहाय मानुषान् कायान् दिव्यान् कायानुपासते ॥
दिव्यावदान : सुकरिकावदान/१

२९. कृत्वापि पापानि सुदारुणानि यदाश्रयादुत्तरति क्षणेन ।
शूराश्रयेणेव महाभयानि नाश्रीयते तत्कथमज्ञसत्त्वैः ॥
बोधिचर्यावतार - १/१३

३०. बोधिसत्त्वत्वबुद्धत्वमनुमोदे च तायिनाम् ॥ बोधिचर्यावतार - ३/२

३१. सर्वासु दिक्षु संबुद्धान् प्रार्थयामि कृताञ्जलिः ।
धर्मप्रदीपं कुर्वन्तु मोहाद् दुःखप्रपातिनाम् ॥ बोधिचर्यावतार - ३/४

३२. निर्वातुकामांश्च जिनान् याचयामि कृताञ्जलिः ।
कल्पाननन्तांस्तिष्ठन्तु मा भूदन्धमिदं जगत् ॥ बोधिचर्यावतार - ३/५

३३. एवं सर्वमिदं कृत्वा यन्मयासादितं शुभम् ।
तेन स्यां सर्वसत्त्वानां सर्वदुःखप्रशान्तिकृत् ॥ बोधिचर्यावतार - ३/६

३४. यावती प्रथमा कोटिः संसारस्यान्तवर्जिता ।
तावत्सत्त्वहितार्थाय चरिष्याम्यमितां चरिम् ॥
उत्पादयामि संबोधौ चित्तं नाथस्य संमुखम् ॥ शिक्षासमुच्चय - पृ. ११

३५. यथा गृहीतं सुगतैर्बोधिचित्तं पुरातनैः ।
ते बोधिसत्त्वशिक्षायामानुपूर्व्या यथा स्थिताः ॥
तद्वदुत्पादयाम्येष बोधिचित्तं जगद्धिते ।
तद्वदेव च ताः शिक्षाः शिक्षिष्यामि यथाक्रमम् ॥
बोधिचर्यावतार ३/२२-२३

३६. एवं गृहीत्वा मतिमान् बोधिचित्तं प्रसादतः ।
पुनः पृष्ठस्य पुष्टचर्थं चित्तमेवं प्रहर्षयेत् ॥ बोधिचर्यावतार - ३/२४

३७. एवमनन्तप्रभो नाम तथागतो यत्रार्चिष्मता तथागतेन प्रथमं बोधिचित्तम्











उत्पादितं तृणप्रदीपं दत्वा नगरावलम्बकभूतेन (भद्रकल्पिकसूत्रमा उद्धरण गरिएको) । शिक्षासमुच्चय - पृष्ठ ८

३८. तस्य च बोधिचित्तस्य सहोत्पादादेवावतीर्णो भवति बोधिसत्त्वोऽनुत्तरे बोधिमहायाने । बोधिसत्त्वभूमि - पृ. ८

३९. स चित्तोत्पादो बोधिसत्त्वशिक्षायाः सन्निश्रयः ।

बोधिसत्त्व भूमि - पृ. ९

४०. युगान्तकालानलवन्महान्ति पापानि यन्निर्दहति क्षणेन ।

बोधिचर्यावतार - १/१४

४१. तस्मादनुत्तरायाः सम्यक्संबोधेः स चित्तोत्पादो मूलम् ।

बोधिसत्त्व भूमि - पृ. ८

४२. बोधिचित्ताद्धि यत्पुण्यं तच्च रूपि भवेद्यदि ।
आकाशधातु संपूर्य भूयश्चोत्तरि तद्भवेत ॥

बोधिपथप्रदीप मा उद्धरण गरिएको - १/२६

४३. गङ्गावालिकसंख्यानि बुद्धक्षेत्राणि यो नरः ।
दद्यात्सद्रत्नपूर्णानि लोकनाथेभ्य एव हि ।
यश्चैकः प्राञ्जलिर्भूत्वा चित्तं बोधाय नामयेत् ॥
इयं विशेष्यते पूजा यस्यान्तोऽपि न विद्यते ।

बोधिपथप्रदीप मा उद्धरण गरिएको - १/२७

४४.समाददाति तच्चित्तम्
ततः प्रभृति सुप्तस्य प्रमत्तस्याप्यनेकशः ।
अविच्छिन्नाः पुण्यधाराः प्रवर्तन्ते नभःसमाः ॥ बोधिचर्यावतार - १/१९

४५. यस्तेषांसुखरङ्काणां पीडितानामनेकशः ।
तृप्तिं सर्वसुखैः कुर्यात् सर्वाः पीडाश्छिनत्ति च ॥ बोधिचर्यावतार - १/२९
नाशयत्यपि संमोहं साधुस्तेन ममः कुतः ।
कुतो वा तादृशं मित्रं पुण्यं वा तादृशं कुतः ॥ बोधिचर्यावतार - १/३०

४६. यदि चैवं प्रतिज्ञाय साधयेयं न कर्मणा ।
एतान् सर्वान् विसंवाद्य का गतिर्मे भविष्यति ॥ बोधिचर्यावतार - ४/४

४७. यस्मादापद्यमानोऽसौ सर्वसत्त्वार्थहानिकृत् ॥ बोधिचर्यावतार - ४/८

४८. एवमापत्तिबलतो बोधिचित्तबलेन च ।
दोलायमानः संसारे भूमिप्राप्तौ चिरायते ॥ बोधिचर्यावतार - ४/११











**परिच्छेद १०: बोधिचित्तको अभ्यास**

१. एवं प्रणिधिचित्तस्य समुत्पादे तु ये गुणाः ।
गण्डव्यूहे तु ते सूत्रे मैत्रेयेण प्रभाषिताः ॥ बोधिपथप्रदीप – १२/१३

२. पुण्यज्ञानस्वरूपस्य संभारस्य प्रपूरये । बोधिपथप्रदीप - ३५

३. उत्पाद्य बोधिप्रणिधानचित्तं नैकप्रयत्नैः परिवर्धनीयम् ॥
बोधिपथप्रदीप – १८

४. बुद्धं च धर्मं च गणोत्तमं च
यावद्धि बोधिं शरणं गतोऽस्मि ।
दानादि-कृत्यैश्च कृतैर्ममयैभिः
बुद्धो भवेयं जगतो हिताय ॥ चित्तोत्पादविधि – अतीश दीपंकरश्रीज्ञान

५. जन्मान्तरेऽपि स्मरणार्थमस्य शिक्षा यथोक्ता परिपालनीया ।
बोधिपथप्रदीप – १८

**परिच्छेद ११: प्रस्थान बोधिचित्तको अभ्यास :षड्पारमिता**

१. प्रस्थानचित्तात्मयमस्थितेन ।
त्रिशीलशिक्षा परिशिक्ष्यते चेत् त्रिशीलशिक्षासु महादरः स्यात् ॥
बोधिपथप्रदीप - ३३

२. शिक्षात्रयमधिकृत्य च षट् पारमिता जिनैः समाख्याताः ।
आद्या तिस्रो द्वेधा अन्त्यद्वयतस्तिसृष्वेका ॥ महायान सूत्रालंकार - १६/७

३. भोगात्भावसंपत्परिचारारम्भसंपदभ्युदयः ॥ महायान सूत्रालंकार – १६/२

४. पूर्वोत्तरनिश्रयश्चोत्पत्तेस्तत्क्रमेण निर्देशः ।
हीनोत्कर्षस्थानादौदारिकसूक्ष्मतश्चापि ॥ महायान सूत्रालंकार - १६/१४

५. दानं विपक्षहीनं ज्ञानेन गनं च निर्विकल्पेन ।
सर्वेच्छापरिपूरकमपि सत्त्वविपाचकं त्रेधा ॥ महायान सूत्रालंकार - १६/८

६. दारिद्रचस्यापनयाच्छैत्यस्य च लम्भनात् क्षयात् क्रुद्धेः ।
वरयोगमनोधारणपरमार्थज्ञानश्चोक्तिः ॥ महायान सूत्रालंकार - १६/१५

७. दानादौ षड्विधट्कतेषां प्रत्येकं संग्रहेण या ।
सन्नाहप्रतिपतिः सा षड्भिः षैर्यथोदिता ॥ अभिसमयालंकार - १/४३







८. दानं शीलं च पुण्यस्य प्रज्ञा ज्ञानस्य संभृतिः ।
त्रयं चान्द्द्वयस्यापि ॥ महायान सूत्रालंकार - १८/३९

**परिच्छेद १२ : दान पारमिता**

१. मात्सर्य प्रेत भवते उपपद्ययाती,
अथवा मनुष्य तद भोति दरिद्ररूपो ॥ रत्नगुणसञ्चय गाथा - ३१/११
२. श्रोणकोटीकर्णको कथा परिशिष्ट २ अन्तर्गत पृष्ठ ४६० मा हेर्नुहोला ।
३. दानेन प्रेतगति छिन्दति बोधिसत्त्वो दारिद्रकं च छिनती तथ सर्वक्लेशान् ।
भोगांश्चानन्तविपुलां लभते चरन्तो ॥ रत्नगुणसञ्चय गाथा - ३२/१
४. दानेन सत्त्व परिपाचयि कृच्छ प्राप्तान् ॥
रत्नगुणसञ्चय गाथा - ३२/१
५. बोधिसत्त्वभूमिको मूल संस्कृत पाठमा फरक रहेको पाइन्छ । सो पाठ तिब्बती अनुवाद अनुसार हो ।
६. न च बोधिसत्त्व कीर्तिशब्दश्लोकमिश्रितं दानं ददाति ।
बोधिसत्त्वभूमि - पृ. ८५
७. न च बोधिसत्त्वो दारिद्रचभयभीतो दानं ददाति । बोधिसत्त्वभूमि - पृ. ८४
८. न शक्रत्वमारत्वचक्रवर्तित्वैश्वर्यसन्निश्रितं (दानं ददाति) ।
बोधिसत्त्वभूमि - पृ. ८५
९. यस्मै पथ्यं तस्मै विषं चापि प्रदीयताम् ।
अपथ्ये च वरे भोज्ये तस्मै तु तन्न दीयताम् ॥ रत्नावली - ३/६४
सर्पग्रस्ताङ्गविच्छेदो यथा पथ्यं समुच्यते ।
कर्त्तुं चाप्यसुखं तद्वत् ऊचे परहिते मुनिः ॥ रत्नावली - ३/६५
१०. त्यजेन्न जीवितं तस्मादशुद्धे करुणाशये ।
तुल्याशये तु तत्त्याज्यमित्थं न परिहीयते ॥ बोधिचर्यावतार - ५/८७
तिब्बती अनुवादमा केही भिन्नता पाइन्छ ।
११. न बोधिसत्त्वस्य शरीरभोगयोः परेष्वदेयं पुनरस्ति सर्वथा ॥
महायान सूत्रालंकार - ८/१६
१२. त्रिचीवरबहिस्त्यजेत् ॥ बोधिचर्यावतार - ५/८५
१३. गुणोपकारिक्षेत्रे च । बोधिचर्यावतार - ५/८१











१४. अभयदानं सिंहव्याघ्रग्राहराजचौरोदकादिभयपरित्राणतया वेदितव्यम् ।
बोधिसत्त्वभूमि - पृ. ९२

१५. धर्म निरामिषु जगत्यनुशासयन्ति । रत्नगुणसञ्चय गाथा - १७/३

१६. देशेति धर्म जगती दुःखसंक्षयाये । रत्नगुणसञ्चय गाथा - ३२/४

१७. धर्मदानमविपरीतधर्मदेशना न्यायोपदेशः शिक्षापदसमादापना च ।
बोधिसत्त्वभूमि - पृ. ९२

१८. अध्येष्येयुर्यदि त्वां ते धर्मदानस्य कारणात् ।
प्रथमं वाचं भाषेय्या नाहं वैपुल्यशिक्षितः ॥
चन्द्रप्रदीप सूत्र - २४/४४

१९. सहसैषां न जल्पेत तुलयित्वा च भाजनम् ।
यदि भाजनं विजानीया अनधीष्टोऽपि देशयेत् ॥
चन्द्रप्रदीप सूत्र - २४/४६

२०. उदार प्रज्ञप्त करित्व आसनं चौक्षे मनोज्ञे पृथिवीप्रदेशे ॥
सद्धर्मपुण्डरीक सूत्र - १३/२६

२१. सपादपीठस्मि निषद्य आसने विचित्रदूष्येहि सुसंस्तृतस्मिन् ॥
सद्धर्मपुण्डरीक सूत्र - १३/२८

२२. न च वस्तुनिश्रयु करोति ददित्व दानं
विदु पाकु नैव प्रतिकाङ्क्षति सो कदाचित् ॥
एवं त्यजित्व भवते विदु सर्वत्यागी
अल्पं त्यजित्व लभते बहु अप्रमेयम् ॥
रत्नगुणसञ्चय गाथा - २२/१४

२३. शून्यताकरुणागर्भचेष्टितात् पुण्यशोधनम् ॥ शिक्षासमुच्चय कारिका २१

२४. एवं हि बोधिसत्त्वः... दानपारमितां परिपूरयित्वाऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । बोधिसत्त्वभूमि - पृ. ९४

२५. दानेन प्रेतगति छिन्दति बोधिसत्त्वो दारिद्रकं च छिनती तथ सर्वक्लेशान् ॥
भोगाश्चानन्तविपुलां लभते चरन्तो दानेन सत्त्व परिपाचयि कृच्छ्रप्राप्तान् ॥
रत्नगुणसञ्चय गाथा - ३२/१

२६. भीतेभ्योऽभयदानतः । सर्वमारैरनाहतः । रत्नावली - ३/९२

२७. धर्मस्य श्रवणे दानेऽनावृतं कृते सति ।
बुद्धेन सह संवासोऽचिरं हि प्राप्स्यतेऽभीष्टः ॥ रत्नावली - ३/९०







## परिच्छेद १३ : शील पारमिता

१. शीलेन तीर्यगति वर्जयि नेकरूपामष्टो च
अक्षण क्षणां लभते स नितयम् ॥ रत्नगुणसञ्चय गाथा - ३२/२

२. चतुर्भिर्गुणैर्युक्तं समासतो बोधिसत्त्वानां स्वभावशीलं वेदितव्यम् । कतमैश्चतुर्भिः ? परतः सम्यक्समादानतः सुविशुद्धाशयतया व्यतिक्रान्तौ प्रत्यापत्त्याऽव्यतिक्रमाय चादरजातस्योपस्थितस्मृतितया । बोधिसत्त्वभूमि - पृ. ९५

३. तत्र संवरशीलं बोधिसत्त्वस्य यत्सप्तनैकायिकं प्रातिमोक्षसंवरसमादानं भिक्षु भिक्षुणीशिक्षमाणाश्रामणेरश्रामणेर्युपासकोपासिकाशीलम् । तदेतद् गृहिप्रव्रजितपक्षे यथायोगं वेदितव्यम् । बोधिसत्त्वभूमि - पृ. ९६

४. राजा का पाँच मूल आपत्तिहरू यस प्रकार छन् : 1. त्रिरत्नका सम्पत्तिहरू छिनेर वा चोरेर लग्नु, 2. सद्धर्म त्याग्नु, 3. भिक्षुको कषाय वस्त्र फुकाल्न लगाई उसलाई प्रव्रज्यामुक्त गर्नु, कुटनु पिट्नु र जेलमा थुन्नु, चाहे त्यो भिक्षु शीलभ्रष्टै किन नहोस्, 4. पाँच आनन्तर्य कर्ममध्ये कुनै एक गर्नु र 5. मिथ्यादृष्टि राख्नु ।

५. मन्त्रीका पाँच मूल आपत्तिहरू यस प्रकार छन् : 1. गाउँ, 2. निगम, 3. शहर, 4. जनपद एवं 5. राष्ट्रलाई ध्वस्त गर्नु

६. रत्नत्रयस्वहरणादापत्पाराजिका मता ।
सद्धर्मस्य प्रतिक्षेपाद् द्वितीया मुनिनोदिता ॥
दुःशीलस्यापि वा भिक्षोः काषायस्तैन्यताडनात् ।
चारके वा विनिक्षेपादपप्रव्राजनेन च ॥
पञ्चानन्तर्यकरणान्मिथ्यादृष्टिग्रहेण च ।
ग्रामादिभेदनाद्वापि मूलापत्तिर्जिनादिता ॥
शून्यतायाश्च कथनात्सत्त्वेष्वकृतबुद्धिषु ।
बुद्धत्वप्रस्थितानां तु संबोधेर्विनिवर्तनात् ॥
प्रातिमोक्ष. परित्याज्य महायाने नियोजनात् ।
शिष्ययानं न रागादिप्रहाणायेति वा ग्रहात् ॥
परेषां ग्रहणाद्वापि पुनः स्वगुणकाशनात् ।
परसंसनतो लाभसत्कारश्लोकहेतुना ॥
गम्भीरक्षान्तिकोऽस्मीति मिथ्यैव कथनात्पुनः ।
दण्डापयेद्वा श्रमणान् दद्याद्वा शरणत्रयात् ॥









गृह्णीयाद्दीयमानं वा शमथत्याजनात्पुनः ।
प्रतिसंलीनभोगं च स्वाध्यायिषु निवेदनात् ॥
मूला आपत्तयो ह्येता महानरकहेतवः ॥ शिक्षासमुच्चय - पृष्ठ ४१

७. बोधिसत्त्वभूमिको पृष्ठ १०८ मा हेर्नुहोस्

८. बोधिसत्त्वभूमिको पृष्ठ १०९-१२४ हेर्नुहोस् ।

९. बोधिसत्त्वः शीलं निश्रित्य शीलं प्रतिष्ठाय श्रुते योगं करोति चिन्तायां....भावनायामेकारामतायाम् । ....गुरूणां गौरवेणोपस्थानस्य कर्ता भवति । ग्लानानां....ग्लानोपस्थानस्य कर्ता भवति । ....साधुकारस्य दाता भवति ।...भूतस्य वर्णस्याहर्ता भवति ।...पुण्यस्य....अनुमोदिता भवति । ..... व्यतिक्रमं....परेषां क्षमिता भवति । ....कुशलम्...बोधौ परिणामयिता भवति । .... प्रणिधानानां...कर्ता भवति । ....त्रिरत्नपूजायाः ...कर्ता भवति । .... आरब्धवीर्यः ...अप्रमादविहारी... शिक्षापदानां स्मृतिसंप्रजन्यचारिकया चारक्षकः । इन्द्रियैश्च गुप्तद्वारो भोजने मात्रज्ञः पूर्वरात्रापररात्रं जागरिकानुयुक्तः सत्पुरुषसेवी कल्याणमित्रसन्निश्रितः आत्मस्खलितानाञ्च परिज्ञाता भवति....परिज्ञाय च...प्रतिसंहर्ता भवति । ..एवंभागीयानां...धर्माणामर्जनरक्षणपरिवर्धनाय यच्छीलं (तद्)...कुशलधर्मसंग्राहकं शीलमित्युच्यते ।

१०. सत्त्वानुग्राहकं शीलं । तत्समासत एकादशाकारं वेदितव्यम् । ... कतमे ? सत्त्वकृत्येष्वर्थोपसंहितेषु सहायीभावः । सत्त्वानाम्....दुःखेषु....सहायीभावः....लौकिकलोकोत्तरेष्वर्थेषु...न्यायोपदेशः...कृतज्ञतामनुरक्षतोऽनुरूपप्रत्युपस्थानम्... भयस्थानेभ्यः...आरक्षा ... व्यसनेषु शोकविनोदना । उपकरणविघातिषु ... उपकरणोपसंहारः ... धर्मेण गणपरिकर्षणा ... चित्तानुवर्तनता । भूतैश्च गुणैः संप्रहर्षणता... हिताशयानुगतेन ... निग्रहक्रिया ... ऋद्धिबलेन ... उद्वेजना ... आवर्जना । बोधिसत्त्वभूमि - पृ. ९७

११. एवं वशीकृतस्वात्मा नितयं स्मितमुखो भवेत् ।
त्यजेद् भृकुटिसंकोचं पूर्वभाषी जगत्सुहृत् ॥ बोधिचर्यावतार - ५/७१

१२. ऋजु पश्येत्सदा सत्त्वांश्चक्षुषा संपिबन्निव ।
एतानेव समाश्रित्य बुद्धत्वं मे भविष्यति ॥ बोधिचर्यावतार - ५/८०

१३. प्रलम्बपादं नासीत न बाहू मर्दयेत् समम् । बोधिचर्यावतार - ५/९२

१४. मुखपूरं न भुञ्जीत सशब्दं प्रसृताननम् । बोधिचर्यावतार - ५/९२

१५. सशब्दपातं सहसा न पीठादीन् विनिक्षिपेत् ।











नास्फालयेत कवाटं च स्यान्निशब्दरुचिः सदा । बोधिचर्यावतार - ५/७२

१६. नाथनिर्वाणशय्यावच्छयीतेप्सितया दिशा । बोधिचर्यावतार - ५/९६

१७. यद्येषां स्खलितं पश्येद्दोषांस्तेषां न कीर्तयेत् ।
यादृशं काहिती कर्म लप्स्यते तादृशं फलम् ॥ चन्द्रप्रदीप सूत्र - २४/४१

१८. विश्वस्तविन्यस्तपदं विस्पष्टार्थं मनोरम् ।
श्रुतिसौख्यं कृपामलं मृदुमन्दस्वरं वदेत् ॥ बोधिचर्यावतार - ५/७९

१९. बोधिसत्त्वः शीलपारमितां परिपूरयित्वानुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते ।
बोधिसत्त्वभूमि - पृ. ९४

**परिच्छेद १४ः क्षान्ति पारमिता**

१. सर्वमेतत्सुचरितं दानं सुगतपूजनम् ।
कृतं कल्पसहस्रैर्यत् प्रतिघः प्रतिहन्ति तत् ॥ बोधिचर्यावतार - ६/१

२. मनः शमं न तिं याति गृह्णाति न प्रीतिसुखमश्नुते ।
न निद्रां न धृद्वेषशल्ये हृदि स्थिते ॥ बोधिचर्यावतार - ६/३

३. संक्षेपान्नास्ति यत्किंचित् क्रोधनो येत सुस्थितः ॥ बोधिचर्यावतार - ६/५

४. सुहृदोऽप्युद्विजन्तेऽस्माद् ददाति न च सेव्यते । बोधिचर्यावतार - ६/५

५. दुष्टान क्षान्तिविकलान कुतोऽस्ति बोधिः ।
रत्नगुणसञ्चय गाथा - २४/४

६. न च द्वेषसमं पापं न च क्षान्तिसमं तपः ।
तस्मात् क्षान्तिं प्रयत्नेन भावयेद्विविधैर्नयैः ॥ बोधिचर्यावतार - ६/२

७. यः क्रोधं हन्ति निर्बन्धात् स सुखीह परत्र च । बोधिचर्यावतार - ६/६

८. निरामिषेण च चित्तेन केवलया करुणया मर्षणा । अयं समासतो बोधिसत्त्वस्य क्षान्तिस्वभावो वेदितव्य : । बोधिसत्त्वभूमि - पृ. १३०

९. जादुगर आदि ले दर्शकहरूका आँखा छलेर बनाएका दृश्य इत्यादि

१०. एवं परवशं सर्वं यद्वशं सोऽपि चावशः ।
निर्माणवदचेष्टेषु भावेष्वेवं क्व कुप्यते ? ॥ बोधिचर्यावतार - ६/३१

११. मयापि पूर्वं सत्त्वानामीदृश्येव व्यथा कृता ।
तस्मान्मे युक्तमेवैतत् सत्त्वोपद्रवकारिणः ॥ बोधिचर्यावतार - ६/४२

१२. तच्छस्त्रं मम कायश्च द्वयं दुःखस्य कारणम् ।











तेन शस्त्रं मया कायो गृहीतः कुत्र कुप्यते ? ॥ बोधिचर्यावतार - ६/४३
१३. गण्डोऽयं प्रतिमाकारो गृहीतो घट्टनासहः ।
तृष्णान्धेन मया तत्र व्यथायां कुत्र कुप्यते ? ॥ बोधिचर्यावतार - ६/४४
१४. मोहादेकेऽपराध्यन्ति कुप्यन्त्यन्ये विमोहिताः ।
ब्रूमः कमेषु निर्दोषं कं वा ब्रूमोऽपराधिनम् ॥ बोधिचर्यावतार - ६/६७
१५. एतानाश्रित्य में पापं क्षीयते क्षमतो बहु । बोधिचर्यावतार - ६/४८
१६. बोधिचर्यासहायत्वात् स्मृहणीयो रिपुर्मम । बोधिचर्यावतार - ६/१०७
मया चानेन चोपात्तं तस्मादेतत्क्षमाफलम् ।
एतस्मै प्रथमं देयमेतत्पूर्वा क्षमा यतः । बोधिचर्यावतार - ६/१०८
१७. किं च निश्छद्मबन्धूनामप्रमेयोपकारिणाम् ।
सत्त्वाराधनमुत्सृत्य निष्कृतिः का परा भवेत ? ॥
बोधिचर्यावतार - ६/११९
१८. एतानाराध्य बहवः संपत्पारं यतो गताः । बोधिचर्यावतार - ६/११२
१९. पूर्वजन्मसुहृत्संज्ञा, धर्ममात्रानुसारिणीसंज्ञा, अनित्यसंज्ञा, दुःखसंज्ञा, परिग्रहसंज्ञा च । बोधिसत्त्वभूमि - पृ. १३१
२०. बोधिसत्त्वः सर्ववस्तुकं दुःखमधिवासयति । ...तत्समासतः अष्टाकारं वेदितव्यम् । सन्निश्रयाधिष्ठानम्, भिक्षाकवृत्ताधिष्ठानम्, अभियोगक्लमाधिष्ठानम्, सत्त्वार्थक्रियाधिष्ठानम्, इतिकरणीयाधिष्ठानञ्चेति । बोधिसत्त्वभूमि - पृ. १३२
२१. इदं तु मे परिमितं दुःखं सम्बोधिसाधनम् ।
नष्टशल्यव्यथापोहे तदुत्पाटनदुःखवत् ॥ बोधिचर्यावतार - ७/२२
२२. उरसारातिघातान्ये प्रतीच्छन्तो जयन्त्यरीन् ।
ते ते विजयिनः शूराः शेषास्तु मृतमारकाः ॥ बोधिचर्यावतार - ६/२०
२३. तत्र कतमा बोधिसत्त्वस्य धर्मनिध्यानाधिमुक्तिक्षान्तिः ? ... अष्टविधे अधिमुक्त्यधिष्ठाने अधिमुक्तिः ... रत्नगुणेषु सत्त्वार्थे बुद्धबोधिसत्त्वानां महाप्रभावे हेतौ फले प्राप्तव्येऽर्थे आत्मनस्तत्प्राप्त्युपाये ज्ञेयगोचरे च ।
बोधिसत्त्वभूमि - पृ. १३४
२४. क्षान्तिं विपुलामप्रमाणां महाबोधिफलोदयां निश्रित्य बोधिसत्त्वोऽनुत्तरां सम्यक्संबोधिमधिसंबुध्यते । बोधिसत्त्वभूमि - पृ. १३७
२५. प्रासादिकत्वमारोग्यं प्रमोद्यं चिरजीवितम् ।
चक्रवर्तिसुखं स्फीतं क्षमी प्राप्नोति संसरन् । बोधिचर्यावतार - ६/१३४







## परिच्छेद १५: वीर्य पारमिता

१. वीर्येण शुक्लगुण हानि न अभ्युपैति
 ज्ञानं अनन्त लभते जिनकोशगञ्जम् ॥ *रत्नगुणसञ्चय गाथा* - ३२/३
२. वीर्येण सत्कायमतीत्य मुक्ताः । महायान सूत्रालंकार - १६/६६
३. वीर्येण बोधिं परमां विबुद्धाः । महायान सूत्रालंकार - १६/६६
४. 'उत्साहः कुशले सम्यक्' इति स्वभावः । महायान सूत्रालंकार - १६/२३
५. आलस्यं कुत्सितासक्तिर्विषादात्मावमन्यना । बोधिचर्यावतार - ७/२
६. यावत्संभृतसंभारं मरणं शीघ्रमेष्यति । बोधिचर्यावतार - ७/७
७. सन्त्यज्यापि तदालस्यमकाले किं करिष्यमि ? बोधिचर्यावतार - ७/७
८. कृताकृतापरीक्षोऽयं मृत्युर्विश्रम्भघातकः ।
 स्वस्थास्वस्थैरश्वास्य आकस्मिकमहाशनिः ॥ बोधिचर्यावतार - २/३४
९. तस्मादुत्सङ्गगे सर्पे यथोत्तिष्ठति सत्त्वरम् ।
 निद्रालस्यागमे तद्वत्प्रतिकुर्वीत सत्वरम् ॥ बोधिचर्यावतार - ७/७१
१०. तेऽप्यासन् दंशमशका मक्षिकाः कृमयस्तथा ।
 यैरुत्साहवशात्प्राप्ता दुरापा बोधिरुत्तमा ॥ बोधिचर्यावतार - ७/१८
११. अहमेकसत्त्वस्यापि दुःखविमोक्षहेतोर्महाकल्पसहस्रतुल्यैः....नरकवासेनैव.... उत्सहेयम्....प्रागेव न्यूनतरेण कालेन तनुतरेण च दुःखेन । इदमेवंरूपं बोधि-सत्त्वस्य सन्नाहवीर्यम् । बोधिसत्त्वभूमि - पृ. १३८
१२. संक्लेशपक्षमध्यस्थो भवेद् दृप्तः सहस्रशः ।
 दुर्योधनः क्लेशगणैः सिंहो मृगगणैरिव ॥ बोधिचर्यावतार - ७/६०
१३. तैलपात्रधरो यद्वदसिहस्तैरधिष्ठितः ।
 स्खलिते मरणत्रासात् तत्परः स्यात्तथा व्रती ॥ बोधिचर्यावतार - ७/७०
१४. तस्मार्त्कावसानेऽपि निमज्जेत्तत्र कर्मणि ।
 यथा मध्याह्नसंतप्त आदौ प्राप्तसराः करी ॥ बोधिचर्यावतार - ७/६५
१५. कामैर्न तृप्तिः संसारे क्षुरधारामधूपमैः ।
 पुण्यामृतैः कथं तृप्तिर्विपाकमधुरैः शिवैः ॥ बोधिचर्यावतार - ७/६४
१६. बोधिसत्त्वा वीर्यपारमितां परिपूर्य अनुत्तरां सम्यक्संबोधिमभिसंबुद्धा अभि-संभोत्स्यन्तेऽभिसंबुध्यन्ते च । बोधिसत्त्वभूमि - पृ. १४२
१७. वीर्यादवाप्तं भवभोगमिष्टम् । महायान सूत्रालंकार - १६/६६





**परिच्छेद १६: ध्यान पारमिता**

१. विक्षिप्तचित्तस्तु नरः क्लेशदंष्ट्रान्तरे स्थितः। बोधिचर्यावतार - ८/१
२. शमथस्यान्तरा सिद्धिमभिज्ञायाश्च नोदयः। बोधिपथप्रदीप - श्लोक ३८
३. तथाऽभिज्ञाबलैर्हीनः सत्त्वार्थकरणेऽअक्षमः। बोधिपथप्रदीप - श्लोक ३५
४. ध्यानेन कामगुण उत्सृजते जुगुप्स्यान्
विद्या अभिज्ञ अभिनिर्हरते समाधिम् ॥
रत्नगुणसञ्चय गाथा - ३२/३
५. शमथेन विपश्यनासुयुक्तः कुरुते क्लेशविनाशमित्यवेत्य।
बोधिचर्यावतार - ८/४
६. ध्यानेनैव च तेन सर्वतनजा बोधित्रये रोपिताः।
महायान सूत्रालंकार - १६/४०
७. कुशलं चित्तैकाग्रयञ्चित्तस्थितिः। बोधिसत्त्वभूमि - पृ. १४३
८. विवेकको अर्थ पृथक हुनु, अलग्गिनु, विरक्तिनु, रुचि हटनु इत्यादि हो।
९. कायचित्तविवेकेन विक्षेपस्य न संभवः। बोधिचर्यावतार - ८/२
१०. स्नेहान्न त्यज्यते लोको लाभादिषु च तृष्णया। बोधिचर्यावतार - ८/३
११. न जातु कामान् प्रतिसेवमानः पुत्रेषु दारेषु जनित्व तृष्णाम्।
गृहं च सेवन्तु जुगुप्सनीयमनुत्तरां प्राप्स्यति सोऽग्रबोधिम् ॥
चन्द्रप्रदीपसूत्र - ५/५
१२. न पश्यति यथाभूतं...प्रियसंगमकाङ्क्षया ॥ बोधिचर्यावतार - ८/७
१३. एवं तस्यापि तत्सङ्गात् तेनानर्थसमागमः।
बालाद्दूरं पलायेत ॥ बोधिचर्यावतार - ८/१४-१५
१४. पुत्रेषु दारेषु जहित्व तृष्णाम्।
उत्त्रस्तु गेहादभिनिष्क्रमन्ति न दुर्लभा तेष्वियमग्रबोधिः ॥
चन्द्रप्रदीपसूत्र - ५/६
१५. सह लाभयशोभिस्ते न ज्ञाताः क्व गता इति। बोधिचर्यावतार - ८/२०
१६. यत्र यत्र रतिं याति।
तत्तत् सहस्रगुणितं दुःखं भूत्वोपतिष्ठति ॥ बोधिचर्यावतार - ८/१८
१७. धनुः पञ्चशतान्येषां क्रोशोऽरण्यं च तन्मतम्। अभिधर्मकोष - ३/८७
१८. अन्नेहि पानेहि च चीवरेहि पुष्पेहि गन्धेहि विलेपनेहि।











नोपस्थिता भोन्ति नरोत्तमा जिना यथ प्रव्रजित्वा चर्याण धर्मम् ॥

चन्द्रप्रदीपसूत्र - ५/१०

यश्चैव बोधिं प्रतिकाङ्क्षमाणः सत्त्वार्थ निर्विण्णु कुसंस्कृतातः ।

रण्यामुखः सप्त पदानि प्रक्रमे अयं ततः पुण्यविशिष्ट भोति ॥

चन्द्रप्रदीपसूत्र - ५/११

१९. शालिस्तम्बमवलोक्य....यो भिक्षवः प्रतीत्यसमुत्पादं पश्यति, स धर्मं पश्यति । यो धर्मं पश्यति, स बुद्धं पश्यति । शालिस्तम्भ सूत्र - पृ. १००

२०. अविद्याप्रत्ययाः संस्काराः...जातिप्रत्यया जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासाः संभवन्ति । एवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवति ।

शालिस्तम्भ सूत्र - पृ. १००

२१. अविद्यानिरोधात् संस्कारनिरोधः .... जातिनिरोधाज्जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासा निरुध्यन्ते । एवमस्य केवलस्य महतो दुःखस्कन्धस्य निरोध भवति । शालिस्तम्भ सूत्र - पृ. १००

२२. परात्मसमतामादौ भावयेदेवमादरात् ।

समदुःखसुखाः सर्वे पालनीया मयात्मवत् ॥ बोधिचर्यावतार - ८/९०

२३. दृश्यतामिदमन्तरम् ।

स्वार्थार्थिनश्च बालस्य मुनेश्चान्यार्थकारिणः ॥ बोधिचर्यावतार - ८/११३

२४. ज्ञात्वा सदोषमात्मानं परानपि गुणोदधीन् ।

आत्मभावपरित्यागं परादानं च भावयेत् ॥ बोधिचर्यावतार - ८/११३

२५. गणनानुगमः स्थानं लक्षणार्थविवर्त्तना ।

परिशुद्धिश्च षडेयमानापानस्मृतिर्मता ॥ अभिधर्मकोष भाष्य - ६/१२

२६. तत् (ध्यानम्) त्रिविधं वेदितव्यम् । दृष्टधर्मसुखविहाराय ध्यानम्, बोधिसत्त्वसमाधिगुणनिर्हाराय ध्यानम्, सत्त्वार्थक्रियायै ध्यानम् ।

बोधिसत्त्वभूमि - पृष्ठ १४३

२७. तत्र यद्बोधिसत्त्वानां सर्वविकल्पापगतं कायिकचैतसिकप्रस्रब्धिजनकं परमप्रशान्तं मन्यनापगतमनास्वादितं सर्वनिमित्तापगतं ध्यानम् । इदमेषां दृष्टधर्मसुखविहाराय वेदितव्यम् । बोधिसत्त्वभूमि - पृष्ठ १४३

२८. तत्र कतमद्बोधिसत्त्वस्य सर्वतोमुखं ध्यानम् । तच्चतुर्विधं द्रष्टव्यम् । सवितर्कसविचारम्, प्रीतिसहगतम्, सातसुखसहगतम्, उपेक्षासहगतं च ।

बोधिसत्त्वभूमि - पृष्ठ १४४











२९. तत्र यद्बोधिसत्त्वानां ध्यानं विचित्राचिन्त्याप्रमाणदशबलगोत्रसंगृहीत-समाधिनिर्हाराय संवर्तते। येषां समाधीनां सर्वश्रावकप्रत्येकबुद्धा अपि नामापि न प्रजानन्ति कुतः पुनः समापत्स्यन्ते। बोधिसत्त्वभूमि - पृष्ठ १४३

३०. चित्तस्य चित्ते स्थानाच्च धर्मप्रविचयादपि।
सम्यक्स्थितिमुपाश्रित्य शमथोऽथ विपश्यना॥
महायान सूत्रालंकार - १८/६६

३१. बोधिसत्त्वा ध्यानपारमितां परिपूर्य सम्यक्संबोधिमभिसंबुद्धवन्तोऽभिसंभोत्स्यन्ते-ऽभिसंबुध्यन्ते च। बोधिसत्त्वभूमि - पृष्ठ १४५

**परिच्छेद १७ः प्रज्ञा पारमिता**

१. जात्यन्धकोटिनियुतान्यविनायकानां मार्गे अकोविदु कुतो नगरप्रवेशे। विन प्रज्ञ पञ्च इमि पारमिता अचक्षुः अविनायका न प्रभवन्ति स्पृशेतु बोधिम्॥ रत्नगुणसञ्चय गाथा - ७/१

२. प्रज्ञाय धर्मप्रकृती परिजानयित्वा त्रैधातुकान्त समतिक्रमते अपायान्॥
रत्नगुणसञ्चय गाथा - ३२/४

३. उपायरहिता प्रज्ञाऽप्युपायः प्रज्ञया विना।
यतो बन्ध इति प्रोक्तौ प्रहेय नोभयं ततः। बोधिपथप्रदीप - ४४

४. तत्र बन्धनं किम्? किम्मुक्तिः? उपायेनानुद्दिष्ट प्रज्ञा हि बन्धनम्। उपायेन निष्ठितप्रज्ञा मुक्तिः। प्रज्ञा अनुद्दिष्टोपायो बन्धनम्। प्रज्ञया निष्ठितोपायो मुक्ति॥
विमलकीर्तिनिर्देशसूत्र - पृ. ११६

५. इमं परिकरं सर्वं प्रज्ञार्थं हि मुनिर्जगौ। बोधिचर्यावतार - ९/१

६. प्राज्ञेषु वर्तनात् त्रिविधेन च प्रभेदेन। लौकिको हीनलोकोत्तरो महालोकोत्तर-श्च॥ महायान सूत्रालंकार टीका - १८/२८

७. प्रकृती असन्त परिजानयमान धर्मा एषा स प्रज्ञवरपारमिताय चर्या॥
रत्नगुणसञ्चय गाथा - १/२८

८. स्कन्धायतनधातूनामनुत्पादावबोधतः।
स्वभावशून्यताज्ञानं सा प्रज्ञेति प्रकीर्तिता॥ बोधिपथप्रदीप - ४७

९. नोत्पादश्च सतो युक्तो ह्यसच्चापि खपुष्पवत्। बोधिपथप्रदीप - ४८

१०. आत्मनि सति परसंज्ञा स्वपरविभागात् परिग्रहद्वेषौ॥











अनयोः सम्प्रतिबद्धाः सर्वे दोषाः प्रजायन्ते । प्रमाणवार्तिक - १/२२१-२२२

११. अस्त्यहं मम चास्तीति मिथ्यैतत्परमार्थिभिः । रत्नावली - १/२८

१२. यथाभूतपरिज्ञानान्न भवत्युभयं यतः ॥ रत्नावली - १/२८

१३. स्वपरोभयतस्तस्य त्रैकाल्यतोऽप्यप्राप्तितः । अहङ्कारं क्षयं याति ।
रत्नावली - १/३७

१४. षट्केन युगपद्योगात्परमाणोः षडंशता । षण्णां समानदेशत्वात् पिण्डः स्यादणुमात्रकः ॥ विंशतिकाप्रकरण - कारिका १२

१५. चित्तमात्रं भो जिनपुत्रा, यदुत त्रैधातुकम् ।
विंशिकावृत्तिमा उद्धरण गरिएको : पृ. १

१६. वासनैर्लुलितं चित्तमर्थाभासं प्रवर्तते । लंकावतार सूत्र - १०/१५५

१७. बाह्यार्थदर्शनं मिथ्या नास्त्यर्थं चित्तमेव तु । लंकावतार सूत्र - १०/१५३

१८. यथान्तोऽस्ति क्षणस्यैवमादर्मध्यं च कल्प्यताम् ।
त्र्यात्मकत्वात् क्षणस्यैवं न लोकस्य क्षणं स्थितिः ॥ रत्नावली - १/६९

१९. प्रकाशा वाप्रकाशा वा यदा दृष्टा न केनचित् ।
बन्ध्यादुहितृलीलेव कथ्यमानापि सा मुधा ॥ बोधिचर्यावतार - ९/२३

२०. ज्ञेयं बिना तु किं वेत्ति येन ज्ञानं निरुच्यते । बोधिचर्यावतार - ९/६१

२१. तेनासंनिहितज्ञेयं ज्ञानं नास्तीति निश्चयः । बोधिचर्यावतार - ९/६२

२२. न बाह्यभावं भावानां न च चित्तपरिग्रहम् ।
सर्वदृष्टिप्रहाणं यत्तदनुत्पादलक्षणम् । लंकावतार सूत्र - १०/५९५

२३. वरं खलु काश्यप सुमेरुमात्रा पुद्गलदृष्टिराश्रिता, न त्वेव अभावाभिनिवेशिकस्य शून्यतादृष्टिः । (प्रसन्नपदा -प. १०८ मा उद्धरण गरिएको)

२४. विनाशयति दुर्दृष्टा शून्यता मन्दमेधसम् । मध्यमककारिका - २४/११

२५. येषां तु शून्यता दृष्टिस्तानसाध्यान् बभाषिरे ॥ मध्यमककारिका - १३/८

२६. नास्तिको दुर्गतिं याति सुगतिं याति चास्तिकः । रत्नावली - १/५७

२७. अस्तीति शाश्वतग्राहो नास्तीत्युच्छेददर्शनम् । मध्यमककारिका - १/१०

२८. मरीचिप्रतिमं लोकमेवमस्तीति गृह्णतः ।
नास्तीति चापि मोहोऽयं सति मोहे न मुच्यते ॥ रत्नावली - १/५६

२९. यथाभूतपरिज्ञानान्मोक्षमद्वयनिश्रितः ॥ रत्नावली - १/५७

३०. मोक्षमद्वयनिश्रितः ॥ रत्नावली - १/५७

३१. तस्मादस्तित्वनास्तित्वे नाश्रीयेत विचक्षणः । मध्यमककारिका - १५/१०











३२. नाप्यन्तर्न बहिश्चित्तमन्यत्रापि न लभ्यते ॥ बोधिचर्यावतार - ९/१०३
३३. न मिश्रं, न पृथक् क्वचित् ।
तन्न किंचिदतः सत्त्वाः प्रकृत्या परिनिर्वृताः ॥ बोधिचर्यावतार - ९/१०४
३४. नापरे न परे तीरे नान्तराले तयोः स्थिता ।
अध्वनां समताज्ञानात् प्रज्ञापारमिता मता ॥ अभिसमयालंकार - ३/१
३५. न चाभावोऽपि निर्वाणं कुत एवास्य भावता । रत्नावली - १/४२
३६. भावश्च यदि निर्वाणं निर्वाणं संस्कृतं भवेत् । मध्यमककारिका - २५/५
३७. नाभावस्तत्र विद्यते ॥ मध्यमककारिका - २५/७
३८. भावाभावपरामर्शक्षयो निर्वाणमुच्यते । रत्नावली - १/४२
३९. यदा न भावो नाभावो मतेः संतिष्ठते पुरः ।
तदान्यगत्यभावेन निरालम्बा प्रशाम्यति ॥ बोधिचर्यावतार - ९/३५
४०. भगवानाह - सर्वधर्मसमतावबोधद्धि काश्यप निर्वाणम् ।
सद्धर्मपुण्डरीक सूत्र - पृ. ९१
४१. अप्रहीणमसंप्राप्तमनुच्छिन्नमशाश्वतम् ।
अनिरुद्धमनुत्पन्नमेतन्निर्वाणमुच्यते ॥ मध्यमककारिका - २५/३
४२. आकाशरत्नसूत्र ग्रन्थ उपलब्ध नभएकाले यस्तै कारिका अभिसमयालंकार-बाट उद्धरण गरिन्छ जुन यस प्रकार छ :
नापनेयमतः किञ्चित् प्रक्षेतव्यं न किञ्चन ।
द्रष्टव्यं भूततो भूतं भूतदर्शी विमुच्यते ॥ अभिसमयालंकार - ५/२१
४३. यो ग्रन्थको संस्कृत मूल उपलब्ध नभएकाले ग्रन्थ-नामको अगाडि ८ राखिएको हो । ग्रन्थको तिब्बती नाम डे चेन शिन् यि युम् ला तोद् पा हो लाई संस्कृतमा पुनरद्धार गरिएको हो ।
४४. अनुपादुपादु उभये अविकल्पमानों ।
एषा स प्रज्ञवरपारमिताय चर्या ॥ रतनगुणसञ्चय गाथा - १/२६
४५. आकाश दृष्टु इति सत्त्व प्रव्याहरन्ति ।
नभदर्शनं कुतु विमृष्यथ एतमर्थम् ॥ रत्नगुणसञ्चय गाथा - १२/९
तथ धर्मदर्शनु निर्दिष्ट तथागतेन ।
४६. मायोपमां य इह जानति पञ्च स्कन्धां
न च माय अन्य न च स्कन्ध करोति अन्यान् ।
नानात्वसंज्ञविगतो उपशान्तचारी











एषा स प्रज्ञवरपारमिताय चर्या ॥ रत्नगुणसञ्चय गाथा - १/१४

४७. रूपान् यथा निर्मिणि मायाकारो हस्तीरथानश्वरथान् विचित्रान् ।
न चात्र कश्चिद् रथ तत्र दृश्यते तथोपमान् जानथ सर्वधर्मान् ॥
समाधिराज सूत्र - ९/१६

४८. न च मन्यते अहु समाधितु व्युत्थितो वा
कस्मार्थ धर्मप्रकृतिं परिजानयित्वा ॥
रत्नगुणसञ्चय गाथा - १/११

४९. नास्ति भावको न भाव्योऽस्ति मन्त्रं नास्ति न देवता ।
संस्थितौ मन्त्रदेवौ च निष्प्रपञ्चस्वभावतः ॥ हेवज्रतन्त्र - १/५/११
वैरोचनाक्षोभ्यामोश्च रत्नारोलिच्च सात्विकः ॥ हेवज्रतन्त्र - १/५/१२

५०. एवं पश्यति मुक्तात्मा सदात्मानं नभं यथा ॥
महासंवरोदयतन्त्रराज - ३३/२

५१. यावन्त बुद्धसम श्रावकप्रत्ययाश्च
मरुतश्च सर्वजगती सुखसौख्यधर्माः
सर्वे ति प्रज्ञवरपारमिताप्रसूता । रत्नगुणसञ्चय गाथा - २८/४




**परिच्छेद १८: पाँच मार्ग**

१. प्राप्योष्णत्वादिकं क्रमात । बोधिपथप्रदीप - ६०

२. लभते प्रमुदित्वादिम । बोधिपथप्रदीप - ६०

३. चतुर्विधं मोक्षभागीयम् -आधिकारिकमाधिमोक्षिकमाधिकामिकमाभिगामिकं च - अभिसमयालंकार भाष्य - ८६ ख/११८

**परिच्छेद १९: दश बोधिसत्त्व भूमि**

१. प्रमुदितादिकमाप्नोति । बोधिपथप्रदीप - ५९

२. प्रमुदिता च नाम बोधिसत्त्वभूमिः.... इमा भवन्तो जिनपुत्रा दश बोधिसत्त्वानां बोधिसत्त्वभूमयः । दशभूमिक सूत्र - पृ. ३

३. पश्यतां बोधिमासन्नां सत्त्वार्थस्य च साधनम् ।
तीव्र उत्पद्यते मोदो मुदिता तेन कथ्यते ॥ सूत्रालंकार - २०/३२











४. लभ्यते प्रथमा भूमिर्दशधा परिकर्मणा ॥ अभिसमयालंकार - १/४९
५. तस्य दशभ्यः पारमिताभ्यो दानपारमिता अतिरिक्ततमा भवति, न च परि-शेषासु न समुदागच्छति । दशभूमिक सूत्र - पृष्ठ. १३
६. अस्यां प्रमुदितायां....भूमौ...बहवो बुद्धा आभासमागच्छन्ति औदारिकदर्शनेन प्रणिधानबलेन च । बहूनि बुद्धशतानि बहूनि बुद्धसहस्राणि...बहूनि बुद्धकोटि-नयुतशतसहस्राण्याभासमागच्छन्ति...तद् दृष्ट्वा उदाराध्याशयेन...मानयति पूजयति...संघगणसम्मानतां च करोति । तानि च कुशलमूलान्यनुत्तरायां सम्यक्संबोधौ परिणामयति (बाँकी पाठ उपलब्ध छैन ।)

दशभूमिक सूत्र - पृष्ठ १२

७. तद्यथापि नाम... जातरूपं कुशलेन कर्मारेण यथा यथाग्नौ प्रक्षिप्यते, तथा तथा (उत्तप्यते) परिशुद्धयति कर्मण्यं च भवति....एवमेव...(प्रथमभूमिस्थितस्य बोधिसत्त्वस्य कुशलमूलानि उत्तप्यन्ते परिशुद्धयन्ति कर्मण्यानि च भवन्ति) ।

दशभूमिक सूत्र - पृष्ठ १३

८. प्रमुदिताया बोधिसत्त्वभूमेः सहप्रतिलम्भेन यानीमानि भयानि भवन्ति, यदिदमाजीविकाभयं वा अश्लोकभयं वा मरणभयं वा दुर्गतिभयं वा पर्षच्छा-रद्यभयं वा, तानि सर्वाणि व्यपगतानि भवन्ति ॥ दशभूमिक सूत्र - पृष्ठ ९
९. जायतेऽस्य विपाकेन दानपारमितापरः ।
लोकधातुशताकम्पी जम्बुद्वीपमहेश्वरः ॥ रत्नावली - ५/४२
१०. आकाङ्क्षञ्च तथारूपं वीर्यमारभते यथारूपेण वीर्यारम्भेण सर्वगृहकलत्रभो-गानुत्सृज्य तथागतशासने प्रव्रजित । प्रव्रजितश्च सन् एकक्षणलवमुहूर्तेन समाधिशतं च प्रतिलभते समापद्यते च । बुद्धशतं च पश्यति, तेषां चाधिष्ठानं संजानीते । लोकधानुशतं च कम्पयति । (बुद्ध) क्षेत्रशतं चाक्रमति । लोकधातुशतं चावभासयति । सत्त्वशतं च परिपाचयति । कल्पशतं च तिष्ठति । कल्पशतं च पूर्वान्तापरान्ततः प्रविश(द्य)ति । धर्ममुखशतं च प्रविचिनोति । कायशतं चादर्शयति । कायं कायं च बोधिसत्त्वशतपरिवारमादर्शयति ।

दशभूमिक सूत्र - पृष्ठ १४

११. दौःशील्याभोगवैमल्यद्विमला भूमिरुच्यते । महायान सूत्रालंकार - २०/३२
१२. शीलं कृतज्ञता क्षान्तिः प्रामोद्यं महती कृपा ।
गौरवं गुरुशुश्रूषा वीर्यं दानादिकेऽष्टमम् ॥ अभिसमयालंकार - १/५२
१३. प्रमुदिता भूमिको विशेष विशुद्धि हेर्नुहोला ।











१४. तदेव जातरूपं कासीसप्रक्षिप्तं भूयस्या मात्रया सर्वमलापगतं भवति, एव-
मेव.......

१५. अग्रार्थे । मध्यान्तविभाग - २/१४

१६. महाधर्मावभासस्य करणाच्च प्रभाकरी ॥ महायान सूत्रालंकार - २०/३३

१७. अतृप्तता श्रुते दानं धर्मस्य च निरामिषम्
 बुद्धक्षेत्रस्य संशुद्धिः संसारापरिखेदिता ॥
 ह्रीरपत्राप्यमित्येतत् पञ्चधा मननात्मकम् । अभिसमयालंकार - १/५३

१८. तद्यथापि नाम... तदेव जातरूपं कुशलस्य कर्मारस्य हस्तगतं तुल्यधरण-
मेव प्रमाणेनावतिष्टते (बाँकी पाठ तिब्बतीभन्दा फरक छ ।)

१९. निष्यन्दाऽग्रार्थ एव च । मध्यान्त विभाग - २/१४

२०. अर्चिभूता यतो धर्मा बोधिपक्षाः प्रदाहकाः ।
 अर्चिष्मतीति तद्योगात्सा भूमिर्द्वयदाहतः ॥ महायान सूत्रालंकार - २०/३४

२१. वनाशाल्पेच्छता तुष्टिर्धूतसंलेखसेवनम् ॥
 शिक्षाया अपरित्यागः कामानां विजुगुप्सनम् ।
 निर्वित्सर्वास्तिसन्त्यागोऽनवलीनानपेक्षते । अभिसमयालंकार - १/५४, ५५

२२. तद्यथापि नाम भवन्तो जिनपुत्रास्तदेव जातरूपं कुशलेन कर्मारिणा-
भरणीकृतमसंहार्यं भवति तदन्यैरकृताभरणैर्जातरूपैः एवमेव भवन्तो जिनपुत्रा बोधि-
सत्त्वस्य अस्यामर्चिष्मत्यां बोधिसत्त्वभूमौ स्थितस्य तानि कुशलमूलान्यसंहार्याणि
भवन्ति तदन्येषामधरभूमिस्थितानां बोधिसत्त्वानां कुशलमूलैः ।

दशभूमिक सूत्र - पृष्ठ २५

२३. निष्परिग्रहताऽर्थे च । मध्यान्तविभाग - २/१४

२४. सत्त्वानां परिपाकश्च स्वचिस्य च रक्षणा ।
 धीमद्भिर्जीयते दुःखं दुर्जया तेन कथ्यते ॥

महायान सूत्रालंकार - २०/३५

२५. संस्तवं कुलमात्सर्यं स्थानं संगणिकावहम् ।
 आत्मोत्कर्षपरावज्ञे कर्ममार्गान् दशाशुभान् ॥
 मानं स्तम्भं विपर्यासं विमतिं क्लेशमर्षणम् ।
 विवर्जयन् समाप्नोति दशैतान् पञ्चमीं भुवम् ॥

अभिसमयालंकार - १/५६, ५७

२६. तद्यथापि नाम....तदेव जातरूपं मुसारगल्वसृष्टं भूयस्या मात्रयोत्तप्यते











परिशुध्यति प्रभास्वरतरं भवति, एवमेव....अस्यां सुदुर्जयायां बोधिसत्त्वभूमौ स्थितस्य ताति कुशलमूलान्युपायप्रज्ञाविचारितानि भूयस्या मात्रयोत्तप्यन्तै परिशुध्यन्ति प्रभास्वरतराणि च भवन्ति (संस्कृत मूल यस प्रकार अलि भिन्न छ ।)

२७. सन्तानाभेद एव च । मध्यान्तविभाग - २/१४

२८. आभिमुख्याद् द्वयस्येह संसारस्यापि निर्वृतेः ।
उक्ता ह्यभिमुखी भूमिः प्रज्ञापारमिताश्रयात् ॥

महायान सूत्रालंकार - २०/३६

२९. दानशीलक्षमावीर्यध्यानप्रज्ञाप्रपूरणात् ।
शिष्यखड्गस्पृहात्रासचेतसां परिवर्जकः ॥
याचितोऽनवलीनश्च सर्वत्यागेऽप्यदुर्मनाः ।
कृशोऽपि नार्थिनां क्षेप्ता षष्ठीं भूमिं समश्नुते ॥

अभिसमयालंकार - १/५८, ५९

३०. तदेव जातरूपं वैडूर्यपरिसृष्टं भूयस्या मात्रयोप्तप्रभास्वरतरं भवति, एवमेव... अस्यामभिमुख्यां बोधिसत्त्वभूमौ स्थितस्य तानि कुशलमूलान्युपायप्रज्ञाज्ञानविचारितानि भूयस्या मात्रयोत्तप्तप्रभास्वरतराणि भवन्ति, भूयो भूयश्च प्रशमासंहार्यतां गच्छन्ति । दशभूमिक सूत्र - पृष्ठ ३५

३१. निस्संक्लेशविशुद्धचर्थे । मध्यान्तविभाग - २/१५

३२. एकायनपथश्लेषाद् भूमिदूरंगमा मता । ॥ महायान सूत्रालंकार - २०/३७

३३. आत्मसत्त्वग्रहो जीवपुद्गलोच्छेदशाश्वताः । निमित्तहेत्वोः स्कन्धेषु धातुष्वायतनेषु च । त्रैधातुके प्रतिष्ठानं सक्तिरालीनचित्तता । रत्नत्रितयशीलेषु तद्दृष्टिचभिनिवेशिता ॥ शून्यतायां विवादश्च तद्विरोधश्च विंशतिः । कलङ्का यस्य विच्छिन्नाः सप्तमीमेत्यसौ भुवम् । त्रिविमोक्षमुखज्ञानं त्रिमण्डलविशुद्धता । करुणामनना धर्मसमतैकनयज्ञता ॥ अनुत्पादक्षमाज्ञानं धर्माणामेकधेरणा । कल्पनायाः समुद्घातः संज्ञादृक्क्लेशवर्जनम् ॥ शमथस्य च निध्यप्तिः कौशलं च विदर्शने । चित्तस्य दान्तता ज्ञानं सर्वत्राप्रतिघाति च ॥ सक्तेरभूमिर्यत्रेच्छं क्षेत्रान्तर गतिः समम् । सर्वत्र स्वात्मभावस्य दर्शनं चेति विंशति ॥

अभिसमयालंकार - १/६०, ६६

३४. तदेव जातरूपं सर्वरत्नप्रत्युप्तं भूयस्या मात्रयोप्ततरं भवति, प्रभास्वरतरं भवति, असंहार्यतरं च भवत्यन्याभ्यो भूषणविकृतिभ्यः, एवमेव....(अस्यामभिमुख्यां बोधिसत्त्वभूमौ स्थितस्य) तानि कुशलमूलान्युपायप्रज्ञाज्ञानाभिनिर्हृतानि भूयस्या











मात्रयोत्तप्ततराणि भवन्ति, प्रभास्वरतराणि, पर्यवदाततराणि, असंहार्यतराणि च भवन्ति सर्वश्रावकप्रत्येकबुद्धैः । दशभूमिक सूत्र - पृष्ठ ४०

३५. अनानात्वार्थ एव च । मध्यान्तविभाग - २/१५

३६. द्वयसंज्ञाविचलनादचला च निरुच्यते ॥ महायान सूत्रालंकार - २०/३७

३७. सर्वसत्त्वमनोज्ञानमभिज्ञाक्रीडनं शुभा ।
बुद्धक्षेत्रस्य निष्पत्तिर्बुद्धसेवापरीक्षणे ॥
अक्षज्ञानं जिनक्षेत्रशुद्धिर्मायोपमा स्थितिः ।
संचिन्त्य च भवादानमिदं कर्माष्टधोदितम् ॥

अभिसमयालंकार - १/६७, ६८

३८. तदेव जातरूपं सुपरिनिष्ठितं कुशलेन कर्मारेण सुपरिकर्मकृतं जम्बूद्वीपस्वामिनः कण्ठे शिरसि वा आबद्धमसंहार्यं भवति सर्वजम्बूद्वीपकानां सत्त्वानामाभरणविकृतैः एवमेव...अस्यामचलायां बोधिसत्त्वभूमौ स्थितस्य बोधिसत्त्वस्य तानि कुशलमूलान्यसंहार्याणि भवन्ति सर्वश्रावकप्रत्येकबुद्धैर्यावन्सप्तमीभूमिस्थितैश्च बोधिसत्त्वैः । दशभूमिक सूत्र - पृष्ठ ४०

३९. अहीनाऽनधिकार्थे च । मध्यान्तविभाग - २/१५

४०. प्रतिसंविन्मतिसाधुत्वाद् भूमिः साधुमती मता ।

महायान सूत्रालंकार - २०/३८

४१. प्रणिधानान्यनन्तानि देवादीनां रुतज्ञता ।
नदीव प्रतिभानानां गर्भावक्रान्तिरुत्तमा ॥
कुलजात्योश्च गोत्रस्य परिवारस्य जन्मनः ।
नैष्क्रम्यबोधिवृक्षाणां गुणपूरे स्वसम्पदः ॥ अभिसमयालंकार - १/६९, ७०

४२. तदेव जातरूपमाभरणीकृतं सुपरिनिष्ठितं कुशलेन कर्मारेण राज्ञश्चक्रवर्तिन उत्तमाङ्गे कण्ठे वा आबद्धमसंहार्यं भवति सर्वकोट्टराजानां चतुद्व्रीपकानां च सत्त्वानाभरणविकृतैः, एवमेव....अस्यां साधुमत्यां बोधिसत्त्वभूमौ स्थितस्य (बोधिसत्त्वस्य) तानि कुशलमूलानि महाज्ञानालोक सुविभक्तान्युत्तप्यन्ते, असंहार्याणि भवन्ति सर्वश्रावकप्रत्येकबुद्धैरधरभूमिस्थितैश्च बोधिसत्त्वैः ।

दशभूमिक सूत्र - पृष्ठ ५३

४३. तस्य सततसमतम्...अनुप्रवर्तन्ते । कतमाश्चतस्रः ? यदुत धर्मप्रतिसंवित्, अर्थप्रतिसंवित्, निरुक्तिप्रतिसंवित्, प्रतिभानप्रतिसंवित् ।

दशभूमिक सूत्र - पृष्ठ ५१











४४. धर्ममेघा द्वयव्याप्तेर्धर्माकाशस्य मेघवत् ॥

महायान सूत्रालंकार - २०/३८

४५. योऽयं भवन्तो जिनपुत्रा बोधिसत्त्व एवमप्रमाणज्ञेयविचारितया बुद्धया यावन्नवमी बोधिसत्त्वभूमिरिति सुविचितविचयः सुपरिपूर्णशुक्लधर्मः अपर्यन्त-संभारोपचयोपचित्तः सुपरिगृहीतमहापुण्यज्ञानसंभारः महाकरुणावैपुल्याधिगतः लोकधातुविभक्तिवैमात्र्यकोविदः सत्त्वधातुप्रविष्टगहनोपचारः तथागतगोचरप्रवेशा-नुगतसंज्ञामनसिकारः बलवैशारद्यबुद्धधर्माध्यालम्बनानुगतः सर्वाकारसर्वज्ञज्ञाना-भिषेकभूमिप्राप्त इत्युच्यते । दशभूमिक सूत्र - पृष्ठ ५१

४६. बोधिसत्त्वो यतो बुद्धैः प्रभाभिरभिषिच्यते ॥ रत्नावली - ५/६०

४७. दिव्य(व्यम)कर्मारकृतं महाभरणोपचार) महामणिरत्नप्रत्युप्तं वशवर्तिनो देव-राजस्योत्तमाङ्गे कण्ठे वा आबद्धमसंहार्यं भवति तदन्यैर्दिव्यमानुष्यकैराभरणविभूष-णोपचारैः, एवमेव....अस्यां दशमीं धर्ममेघां बोधिसत्त्वभूमिमनुप्राप्तस्य ते बोधि-सत्त्वज्ञानोपचारा असंहार्या भवन्ति सर्वसत्त्वैः सर्वश्रावकप्रत्येकबुद्धैः प्रथमायां बोधि-सत्त्वभूमिमुपादाय यावन्नवमीं बोधिसत्त्वभूमिमनुप्राप्तैर्बोधिसत्त्वैः ।

दशभूमिक सूत्र - पृष्ठ ६४

४८. ज्ञेयावरणपक्ष्यमपि दौष्ठुल्यं त्रिविधिं वेदितव्यम् - त्वग्गतम्, फल्गुगतम्, सारगतञ्च । बोधिसत्त्वभूमि - प.. २४३

४९. ते तु सर्वे विहारास्त्रिभिर्महाकल्पासंख्येयैः समुदागच्छन्ति । महाकल्पासंख्येयेनाधिमुक्तिचर्याविहारं समतिक्रम्य प्रमुदितविहारो लभ्यते । तच्च व्यायच्छमानो ध्रौव्येण नाव्यायच्छमानः । द्वितीयेन महाकल्पासंख्येयेन प्रमुदितविहारं यावत्साभोगं निर्निमित्तं विहारमतिक्रम्यानाभोगं निर्निमित्तं प्रतिलभते । तच्च नियतमेव । तथा हि स शुद्धाशयो बोधिसत्त्वो नियतं व्यायच्छते । तृतीयेन महाकल्पासंख्येयेनानाभोगञ्चनिर्निमित्तं प्रतिसंविद्विहारञ्च समतिक्रम्य परमं बोधिसत्त्वविहारं प्रतिलभते ।... यस्त्वाधिमात्राधिमात्रेण वीर्यारम्भेण प्रयुज्यते ततः कश्चिचदन्तर कल्पान् प्रभूतान् व्यावर्तयति कश्चित् यावन्महाकल्पान् । न त्वसंख्येयव्यावृत्तिः कस्यचिदस्तीति वेदितव्यम् । बोधिसत्त्वभूमि - पृ. २४२

**परिच्छेद २०ः सम्यक् सम्बोधि**

१. बुद्धबोधिर्न वै चिरात् ॥ बोधिपथप्रदीप - ५९











२. तस्मा हु श्रद्दधत एव जिनान मातां ।
यदि इच्छथा स्पृशितु उत्तमबुद्धज्ञानम् ॥ रत्नगुणसंचयगाथा - ७/७

३. यथैकरश्मिनिःसारात्सर्वरश्मिविनिःसृतिः ।
भानोस्तथैव बुद्धानां ज्ञेया ज्ञानविनिःसृतिः ॥ महायान सूत्रालंकार - ९/३१

४. आदर्शज्ञानमचल) त्रयज्ञानं तदाश्रितम् ।
समताप्रत्यवेक्षायां कृत्यानुष्ठान एव च ॥ महायान सूत्रालंकार - ९/६७

५. आकाश दृष्टु इति सत्त्व प्रव्याहरन्ति ।
नभदर्शनं कुतु विमृष्यथ एतमर्थम् ।
तथ धर्मदर्शनु निदिष्ट तथागतेन,
न ही दर्शनं भणितु शक्य निदर्शनेन ॥ रत्नगुणसंचयगाथा - १२/९

६. सर्वाकारं कारणमेकस्य मयूरचन्द्रकस्यापि । नासर्वज्ञैर्ज्ञेयं सर्वज्ञज्ञानबलं हि तत्ज्ञानम् ॥ (अभिधर्मकोश को स्फुटार्थव्याख्या मा उद्धरण गरिएको, पृ. ८)

७. महाकरुणया कृत्स्नं लोकमालोक्य लोकवित् ।
रत्नगोत्रविभागो महायानोत्तरतन्त्रशास्त्र - २/५३

८. मोक्षो भ्रममात्रसंक्षयः । महायान सूत्रालंकार - ६/२

९. बुद्धत्वमविनिर्भागशुक्लधर्मप्रभावितम् ।
आदित्याकाशवज्ज्ञानप्रहाणद्वयलक्षणम् ॥
रत्नगोत्रविभागो महायानोत्तरतन्त्रशास्त्र - २/४

१०. क्लेशज्ञेयवृत्तीनां सततमनुगर्त बीजमुत्कृष्टकालं
यस्मिन्नस्तं प्रयातं भवति सुविपुलैः सर्वहानिप्रकारैः ।
बुद्धत्वं शुक्लधर्मप्रवरगुणयुता आ(चा)श्रयस्यान्यथाप्तिस्तत्प्राप्तिर्निर्विकलल्पा द्विषयसुमहतो ज्ञानमार्गात्सुशुद्धात् ॥ महायान सूत्रालंकार - ९/१२

११. त्रिभिः कायैस्तु विज्ञेयो बुद्धानां कायसंग्रहः । महायान सूत्रालंकार - ९/६५

१२. अनादिमध्यान्तमभिन्नमद्वयं त्रिधा विमुक्तं विमलाविकल्पकम् ।
समाहिता योगिनस्तत्प्रयत्नाः पश्यन्ति यं धर्मधातुस्वभावम् ॥
रत्नगोत्रविभागो महायानोत्तरतन्त्रशास्त्र - २/३८

१३. समः सूक्ष्मश्च तच्छ्लिष्टः कायः स्वाभाविको मतः ।
महायान सूत्रालंकार - ९/६२

१४. सर्वधातुषु सांभोग्यो भिन्नों गणपरिग्रहैः ।
क्षेत्रैश्च नामभिः कायैधर्मसंभोगचेष्टितैः ॥ महायान सूत्रालंकार - ९/६१











१५. द्वात्रिंशल्लक्षणाशीतिव्यञ्जनात्मा मुनेरयम् ।
साम्भोगिको मतः कायो महायानोपभोगतः ॥ अभिसमयालंकार - ८/१२

१६. शिल्पजन्ममहाबोधिसदानिर्वाणदर्शनैः ।
बुद्धनिर्माणकायोऽयं महोपायो निमोचने ॥ महायान सूत्रालंकार - ९/६४

१७. निर्माणैश्चित्ररूपिभिः ॥
जातकान्युपपत्तिं च तुषितेषु च्युतिं ततः ।
गर्भावक्रमणं जन्म शिल्पस्थानानि कौशलम् ॥
अन्तःपुररतिक्रीडां नैष्क्रम्यं दुःखचारिकाम् ।
बोधिमण्डोपसंक्रान्तिं मारसैन्यप्रमर्दनम् ॥
संबोधिं धर्मचक्रं च निर्वाणाधिगमक्रियाम् ।
क्षेत्रेष्वपरिशुद्धेषु दर्शयत्याभवस्थितेः ॥ महायानोत्तरतन्त्रशास्त्र - २/५३-५६

१८. लोकेषु यच्छान्तिपथावतारप्रपाचनाव्याकरणे निदानम् ।
रत्नगोत्रविभागो महायानोत्तरतन्त्रशास्त्र - २/४१

१९. करोति येन चित्रणि हितानि जगतः समम् ।
आभवात् सोऽनुपच्छिन्नः कायो नैर्माणिको मुनेः ।
अभिसमयालंकार - ८/३३

२०. आश्रयेणाशयेनापि कर्मणा ते समा मताः । महायान सूत्रालंकार - ९/६६

२१. प्रकृत्याऽस्रंसनेनापि प्रबन्धेनैषु नित्यता । महायान सूत्रालंकार - ९/६६

## परिच्छेद २१ः बुद्ध कर्म निर्देश

१. शक्रदुन्दुभिवन्मेघब्रह्मार्कमणिरत्नवत् ।
प्रतिश्रुतिरिवाकाशपृथिवीवत् तथागतः ॥
रत्नगोत्रविभागो महायानोत्तरतन्त्रशास्त्र - ४/१३

२. विशुद्धवैडूर्यमयं यथेदं स्यान्महीतलम् ।
स्वच्छत्वात्तत्र दृश्येत देवेन्द्रः साप्सरोगणः ॥
रत्नगोत्रविभागो महायानोत्तरतन्त्रशास्त्र - ४/१४
(तिव्वती र संस्कृत पाठमा भिन्नता पाइन्छ ।)

३. यथैव दिवि देवानां पूर्वशुक्लानुभावतः ।
यत्नस्थानमनोरूपविकल्परहिता सती ॥







अनित्यदु:खनैरात्म्यशान्तशब्दैः प्रमादिनः ।
चोदयत्यमरान् सर्वानसकृद्देवदुन्दुभिः ॥
रत्नगोत्रविभागो महायानोत्तरतन्त्रशास्त्र - ४/३१, ३२

४. व्याप्य बुद्धस्वरेणैवं विभुर्जगदशेषतः ।
धर्मं दिशति भव्येभ्यो यत्नादिरहितोऽपि सन् ॥
रत्नगोत्रविभागो महायानोत्तरतन्त्रशास्त्र - ४/३३

५. प्रावृटकाले यथा मेघः पृथिव्यामभिवर्षति ।
वारिस्कन्धं निराभोगो निमित्तं सस्यसंपदः ॥
रत्नगोत्रविभागो महायानोत्तरतन्त्रशास्त्र - ४/४२

६. करुणाम्बुदतस्तद्वत् सद्धर्मसलिलं जिनः ।
जगत्कुशलशस्येषु निर्विकल्पं प्रवर्षति ॥
रत्नगोत्रविभागो महायानोत्तरतन्त्रशास्त्र - ४/४३

७. सर्वत्र देवभवने ब्राह्मचादविचलन् पदात् ।
प्रतिभासं यथा ब्रह्मा दर्शयत्यप्रयत्नतः ॥
तद्वन्मुनिरनाभोगान्निर्माणैः सर्वधातुषु ।
धर्मकायादविचलन् भव्यानामेति दर्शनम् ॥
रत्नगोत्रविभागो महायानोत्तरतन्त्रशास्त्र - ४/५३-५४

८. निर्विकल्पो यथादित्यः कमलानि स्वरश्मिभिः ।
बोधयत्येकमुक्ताभिः पाचयत्यपराण्यपि ॥
सद्धर्मकिरणैरेवं तथागतदिवाकरः ।
विनेयजनपद्मेषु निर्विकल्पः प्रवर्तते ॥
रत्नगोत्रविभागो महायानोत्तरतन्त्रशास्त्र - ४/५९-६०

९. यतः शुचिनि सर्वत्र विनेयसलिलाशये ।
अमेयसुगतादित्यप्रतिबिम्बोदयः सकृत ॥
रत्नगोत्रविभागो महायानोत्तरतन्त्रशास्त्र - ४/६२

१०. युगपद्गोचरस्थानां सर्वाभिप्रायपूरणम् ।
कुरुते निर्विकल्पोऽपि पृथक् चिन्तामणिर्यथा ॥
बुद्धचिन्तामणिस्तद्वत् समेत्य पृथगाशयाः ।
शृण्वन्ति धर्मतां चित्रां न कल्पयति तांश्च सः ॥
रत्नगोत्रविभागो महायानोत्तरतन्त्रशास्त्र - ४/६७-६८









**परिशिष्ट २ः ग्रन्थमा उल्लिखित महापुरुषहरूको संक्षिप्त जीवनी**

१. हेर्नुहोस् - गण्डव्यूह सूत्र पृ. १-४३६ ।
२. अष्टसाहस्रिका प्रज्ञापारमिताको सदाप्ररुदित र धर्मोद्गत परिवर्त हेर्नुहोला । देगे कंग्युर, शेरछिन क, पृ. २६१ ।
३. See: *The Life and Teaching of Naropa* by Herbert V. Guenther, pp. 1-109
४. गण्डव्यूहसूत्र, जयोष्मायतन-परिवर्त, पृ. ९०-९५ । देगे कंग्युर, फलछेन अ, पृ. २२ ।
४. अवदानशतक (मौद्गल्यायन०, पृ. ११३-११५ । देगे कंग्यूर, दोदे अ, पृ. १७३
५. अवदानशतक (मौद्गल्यायन), पृ. ११३-११५ । देगे कंग्युर, दोदे अ, पृ. १७३ ।
६. अवदान कल्पलता, द्वितीय भाग, पृ. ४२८-४३३ । मूलसर्वास्तिवादविनयवस्तु, द्वितीय भाग, पृ. ८६-९६ । देगे कंग्युर, दल्वा क, पृ. १०० ।
७. अवदान कल्पलता, प्रथम भाग, पृ. १३६-१४५ । मूलसर्वास्तिवाद विनयवस्तु, द्वितीय भाग, पृ. १५५ । देगे कंग्युर, दल्वा क, पृ. २५१ ।
८. अवदानशतकम्, स्थविर, पृ. २३३-२३८ । देगे कंग्युर, दोदे अं, पृ. २५४
९. देगे कंग्युर, दल्वा सु, पृ. २४४
१०. देगे कंग्युर, दोदे अ, पृ. २२३ ।
११. आर्यशूरकृत जातकमाला, पृ. ४३–५४ । देगे कंग्युर, दोदे अ, पृ. १५५ ।
१२. देगे कंग्युर, दोदे अ, पृ. २५३ ।
१३. देगे कंग्युर, दल्वा क, पृ. १२० ।
१४. अवदान कल्पलता, प्रथम भाग, पृ. ८५-९५ । देगे कंग्युर, कोनछेग ग, पृ. २०५
१५. अवदान कल्पलता, प्रथम भाग, पृ. २८०-२८४ । देगे कंग्युर दोदे त, पृ. २९९







